श्रीकाशीविश्वनाथपुरीमहल्लारेवड़ीतलावपर चन्द्रशेखरयन्त्रा
लयमे यह यज्ञोपवीतप्रयाग साहु के इहांछापा गया वहुत शुद्धता
पूर्वक मुद्रित भया मिः आषाढ शुक्ल १४ चन्द्रे सम्वत् १९४८॥

य. श्रीगणेशाय नमः अथोपनयनं तत्र शुद्धसमये रविगुरुचंद्रतारादिशुद्धौ जन्मतो गर्भाष्टमेऽब्दे वानुकल्पे षो
डशसंवत्सराभ्यंतरे ब्रह्मवर्च्चसकामस्य पंचमेणुदगयन आपूर्य्यमाणपक्षे नध्याय षष्ठीरिक्ताद्यतिरिक्त
१ तिथौ रविगुरुशुक्रान्यतमवारे मध्यान्हादर्वाक् कुमारपित्राभ्युदयिके कृते तदभावे आचार्येणैव कृते ब्रा
ह्मणान्माणवकं च भोजयित्वा सशिखं कृतक्षौरं स्नानानंतरं यथाशक्त्यालंकृतं कृत्वा वहिः शालायां तु घकेश
शर्करादिशून्यपरिस्कृतभूमौ आचार्योऽग्निस्थापनं कुर्यात् तत्र हस्तमात्रपरिमितचतुरस्रभूमिकुशकरणक
समूहनानंतरं गोमयोदकेनोपलिप्य स्रुवमूलेन प्रागग्रप्रादेशमात्रमुत्तरोत्तरक्रमेण त्रिरुल्लिख्य उल्लेखनक्र
मेणानामिकांगुष्ठाभ्याम्मृदमुद्धृत्य जलेनाभ्युक्ष्य नवीनकांस्यपात्रेणाग्निमानीय स्वाभिमुखं निदध्यात् ततः
कुमारमाचार्यः शिष्यद्वाराग्नेः पश्चाद्दक्षिणपार्श्वेऽवस्थापयति ततः कुमारं बद्धांजलिं संबोधयति ॐ ब्रह्मचर्यमा
गामिति ब्रूहि इति प्रैषानंतरं ॐ ब्रह्मचर्यमागामिति कुमार आह ततः ॐ ब्रह्मचार्यसानीति ब्रूहीत्याचार्येणोक्ते
ॐ ब्रह्मचार्यसानीति कुमारस्त्वाह अथ माणवकमाचार्यो वासः परिधापयति तत्राचार्यपठनीयो मंत्रः ॐ येने १
द्राय बृहस्पतिर्वासः पर्य्यदधादमृतं तेन त्वा परिदधाम्यायुषे दीर्घायुत्वाय बलाय वर्चसे ततो माणवकस्य त्रिराचमनम्

अथमाणवकस्यवेष्टनत्रयेणतनत्रवरयंशिथिलतांमेखलामाचार्य्योबध्नातितत्रमाणवकपठनीयोमंत्रः इयंदुरुक्तं
परिबाधमानावर्णंपवित्रंपुनतीमआगात् प्राणापानाभ्यांबलमादधानास्वसादेवीसुभगामेखलेयंॐयुवासुवासाः
परिवीतिआगात् सउश्रेयान्भवतिजायमानःतंधीरासःकवयउन्नयंति स्वाध्योमनसादेवयंत इतिवाततआचा
र्य्यज्ञोपवीतसहितंभांडाष्टतयंब्राह्मणेभ्योदत्वातत्सदृशामुकगोत्रःस्वकीयोपनयनकर्मविषयकसत्संस्कारआ
श्रयर्थंइदंभांडाष्टतयंसयज्ञोपवीतंसदक्षिणंयथानामितिततोयज्ञोपवीतंपरिदधातिमाणवकःॐयज्ञोपवीतमिति
मंत्रस्यपरमेष्ठीऋषिर्लिंगोक्तादेवतात्रिष्टुप्छंदोयज्ञोपवीतपरिधानेविनियोगःॐयज्ञोपवीतंपरमंपवित्रंप्रजापतेर्यत्
सहजंपुरस्तात् आयुष्यमग्र्यंप्रतिमुंचशुभ्रंयज्ञोपवीतंबलमस्तुतेजः इतिमंत्रेणततऐणेयमजिनंतूष्णींपरिधत्ते ततोमा
णवकंकेशपरिमितपालाशदंडमाचार्य्यःतूष्णींतस्मैप्रयच्छतितंचयोमेदंडइतिप्रजापतिऋषिर्दंडोदेवतायजुर्दंडग्रह
णेविनियोगःयोमेदंडःपरापतद्वैहायसोधिभूम्यां तमहंपुनराददआयुषेब्रह्मणेब्रह्मवर्चसाय इतिमंत्रेणमाणवको
गृह्णातिततआचार्य्योवारिणास्वमंजलिंपूरयित्वाकुमारस्यांजलिंतेनैवांजलिजलेनपूरयतिॐआपोहिष्ठामयोभुवस्तान
ऊर्जेदधातनमहेरणायचक्षसेॐयोवःशिवतमोरसस्तस्यभाजयतेहनःउशतीरिवमातरःॐतस्माअरंगमामवोयस्यक्षया

य. यज्जिन्वथ आपो जनयथा च नः इति ऋग्भिः ततः सूर्यमुदीक्षस्वेति आचार्यप्रेषानंतरं ॐ तच्चक्षुर्देवहितं पुरस्ता-
२ च्छुक्रमुच्चरत् पश्येम शरदः शतं जीवेम शरदः शतं ॐ शृणुयाम शरदः शतं प्रब्रवाम शरदः शतमदीनाः स्याम शर-
दः शतं भूयश्च शरदः शतात् इत्यनेनादित्यं पश्यति अथ कुमारस्य दक्षिणांसं सहृदयं दक्षिणहस्तेन स्पृशत्याचा-
र्यः ॐ मम व्रते ते हृदयं दधामि मम चित्तमनु चित्तं ते अस्तु मम वाचमेकमना जुषस्व बृहस्पतिस्त्वा नियुनक्तु मह्यमि-
ति मंत्रेण ततः कुमारस्य दक्षिणहस्तं गृहीत्वा तं पृच्छति को नामासि श्री अमुकशर्माहं भो इति कुमार आह कस्य ब्रह्मचा-
र्यसीत्याचार्यः भवत इति कुमार आह पुनराचार्यो भाषते ॐ इन्द्रस्य ब्रह्मचार्यस्यग्निराचार्यस्तवाहमाचार्यः श्री अमु-
कशर्मन् अथ माणवकं बद्धांजलिपूर्वां दिदिक्षु प्रदक्षिणमुपस्थानं कारयति अथाचार्यो माणवकं भूतेभ्यः परिददाति
तत्र आचार्यस्य मंत्रपाठः ॐ प्रजापतये त्वा परिददामीति प्राच्यां ॐ देवाय त्वा सवित्रे परिददामि इति दक्षिणस्यां ॐ अद्भ्य-
स्त्वौषधीभ्यः परिददामि इति प्रतीच्यां ॐ द्यावापृथिवीभ्यां त्वा परिददामि इति उदीच्यां ॐ विश्वेभ्यस्त्वा देवेभ्यः परिद-
दामि इत्यधः ॐ सर्वेभ्यस्त्वा भूतेभ्यः परिददाम्यरिष्ट्यै इत्यूर्द्ध्वं ततोऽग्निं प्रदक्षिणीकृत्य आचार्यो दक्षिणदिशि उपविशति माण-
वकः ततः पुष्पचंदनतांबूलवासांसि दायात् ततः ॐ मद्य कर्तव्योपनयनहोमकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्म कर्तुं २

३ अमुकगोत्रममुकशर्माणंब्राह्मणमेभिः पुष्पचंदनतांबूलवासोभिर्ब्रह्मत्वेनत्वामहंवृणे इतिब्राह्मणंवृणुयात् ॐवृतो
स्मीतिप्रतिवचनं पुष्पचंदनताम्बूलवस्त्राण्यादाय अद्यकर्तव्योपनयनकर्म्मणिहोतृत्वकर्म्मकर्तुं अमुकगोत्रम
मुकशर्म्माणंब्राह्मणमेभिः पुष्पचंदनतांबूलवासोभिःहोतृत्वेनत्वामहंवृणेइतिहोतारंवृणुयात्वृतोस्मीतिप्रतिवचनं॥
ॐयथाविहितंकर्म्मकुरुष्वेत्याचार्य्येणोक्ते ॐकरवाणीतिब्राह्मणोवदेत् ततोग्नेर्दक्षिणतःशुद्धमासनंदत्वा तदुपरिप्रा
गग्रान्कुशानास्तीर्य्य ब्रह्माणमग्निप्रदक्षिणंकारयित्वास्मिन्कर्म्मणि त्वम्मेब्रह्माभवेत्यभिधाय भवानीतितेनोक्ते तदुप
रिब्राह्मणमुदङ्मुखमुपवेशय ततःप्रणीतापात्रंपुरतः कृत्वावारिणापरिपूर्य्य कुशैराच्छाद्य ब्रह्मणोमुखमवलोक्या
ग्नेरुत्तरतःकुशोपरिनिदध्यात् ततःपरिस्तरणं बर्हिषश्चतुर्थभागमादायाग्नेयादीशानांतं ब्रह्मणोग्निपर्यंतं नैर्ऋत्याद्वा
यव्यांतं अग्नितःप्रणीतापर्यंतं ततोग्नेरुत्तरतः पश्चिमदिशिपवित्रच्छेदनार्थंकुशत्रयं पवित्रार्थंसाग्रमनंतर्गर्भंकुशपत्रद्व
यंप्रोक्षणीपात्रं आज्यस्थालीसंमार्जनार्थंकुशाः उपयमनकुशाः समिधस्तिस्रः स्रुवः आज्यंषट्पंचाशदुत्तराचार्य्यमु
ष्टिशतद्वयावच्छिन्नामतंडुलपूर्णपात्रंपवित्रच्छेदनकुशानांपूर्वपूर्वदिशिक्रमेणासादनीयं ततःपवित्रच्छेदनकुशैः
पवित्रेछित्वासपवित्रंकरेणप्रणीतोदकानि प्रोक्षणीपात्रेनिधाय अनामिकांगुष्ठाभ्यांगृहीतपवित्राभ्यांतज्जलंत्रिः

य. त्रिरुत्क्षिप्य प्रणीतोदकेन प्रोक्षणीं त्रिरभिषिच्य प्रोक्षणीजलेनासादितवस्तुसेचनं कृत्वाऽग्निप्रणीतयोर्मध्ये प्रोक्ष
३ णीपात्रं निदध्यात् आज्यस्थाल्यामाज्यनिर्वापः अधिश्रयणं ततः कुशं प्रज्वाल्याज्योपरि प्रदक्षिणं भ्रामयित्वा वह्नौ
तत्क्षिप्य स्रुवं त्रिः प्रतप्य संमार्जनकुशानामग्रैरन्तरतो मूलैर्बाह्यतः स्रुवं संमृज्य प्रणीतोदकेनाभ्युक्ष्य पुनस्त्रिः प्र
तप्य दक्षिणतो निदध्यात् तत आज्यमग्नेरवतार्य त्रिः प्रोक्षणीवदुत्पूयावेक्ष्य सत्यपद्रव्ये तन्निरसनं कृत्वा पुनः प्रोक्ष।
णयुत्पवनं तत उत्थायोपयमनकुशान्वामहस्ते कृत्वा प्रजापतिं मनसा ध्यात्वा तूष्णीं घृताक्तास्तिस्रः समिधः प्रक्षिपेत्
उपविश्य सपवित्रप्रोक्षण्युदकेन प्रदक्षिणक्रमेणाग्निं पर्युक्ष्य प्रणीतापात्रे पवित्रे निधाय पातितदक्षिणजानुः ब्रह्मणा
न्वारब्धः समिद्धतमेऽग्नौ स्रुवेणाज्याहुतीर्जुहोति तत्रतत्तदाहुत्यनन्तरं स्रुवावस्थितघृतशेषस्य प्रोक्षणीपात्रे प्रक्षेपः ओं प्र
जापतये स्वाहा इदं प्रजापतये इति मनसा ओं इन्द्राय स्वाहा इदमिन्द्राय इत्याघारौ ओं अग्नये स्वाहा इदमग्नये ओं सोमाय स्वा
हा इदं सोमाय इत्याज्यभागौ ओं भूः स्वाहा इदं भूः ओं भुवः स्वाहा इदं भुवः ओं स्वः स्वाहा इदं स्वः एता महाव्याहृतयः ओं त्व।
न्नो अग्ने वरुणस्य विद्वान्देवस्य हेडो अवयासिसीष्ठाः यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषाओंसि प्रमुमुग्ध्यस्मत्स्वा
हा इदमग्नीवरुणाभ्यां ओं स त्वन्नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ अवयक्ष्व नो वरुणं ओं रराणो वीहि मृडीक ३

४ ओंसुहवोनएधिस्वाहा इदमग्नीवरुणाभ्यांओंअयाश्चाग्नेस्यनभिशस्तिपाश्चसत्वमित्वमयाअसिअयानोयज्ञंवहास्य
यानोधेहिभेषजंओंस्वाहा इदमग्नयेओंयेतेशतंवरुणायेसहस्रंयज्ञियापाशाविततामहान्तः तेभिर्नोअद्यसवितोतविष्णु
र्विश्वेमुंचंतुमरुतःस्वर्काः स्वाहा इदंवरुणायसवित्रेविष्णवेविश्वेभ्योदेवेभ्योमरुद्भ्यःस्वर्केभ्यः ओंउदुत्तमंवरुणपाशम
स्मदवाधमंविमध्यमंओंश्रथाय अथावयमादित्यव्रतेतवानागसोअदितयेस्यामस्वाहा इदंवरुणाय एताःसताःसर्व
प्रायश्चित्तसंज्ञकाः ओंप्रजापतयेस्वाहा इदंप्रजापतये इतिमनसाप्राजापत्यम् ओंअग्नयेस्विष्टकृतेस्वाहाइदमग्नये।
स्विष्टकृते इतिस्विष्टकृद्धोमः ततःसंस्रवप्राशनंआचमनंचततोब्रह्मणेदक्षिणादानंओंअद्यएतस्मिन्नुपनयनहोमक
र्मणिकृताकृतावेक्षणरूपब्रह्मकर्मप्रतिष्ठार्थमिदंपूर्णपात्रंप्रजापतिदैवतंअमुकगोत्रायामुकशर्मणेब्राह्मणायब्र
ह्मणेदक्षिणांतुभ्यमहंसंप्रददे इतिदक्षिणांदद्यात् ओंस्वस्तीतिप्रतिवचनं ततोब्रह्मग्रंथिविमोकः ततःओंसुमित्रियानआ
पओंओषधयःसंतु इतिपवित्राभ्यांजलमानीयतेनशिरःसंमृज्य ओंदुर्मित्रियास्तस्मैसंतुयोस्मान्द्वेष्टियंचवयंद्विष्मः इत्यै
शान्यांप्रणीतान्युब्जीकरणं ततस्तरणक्रमेणबर्हिरुत्थाप्यघृतेनाभिधार्यहस्तेनैवजुहुयात् ओंदेवागातुविदोगातुंवि
त्वागातुमितमनसस्पतइमंदेवयज्ञं ओंस्वाहावातेधाःस्वाहा इतिबर्हिर्होमः ततआचार्य्यःकुमारस्यानुशासनंकरोति

य
४ ॐब्रह्मचार्य्यसीत्याचार्य्यः ॐअसानीतिब्रह्मचारी ॐअपोऽश्नानइत्याचार्य्यः ॐअश्नानीतिकुमारआह ॐक-
र्मकुर्वित्याचार्य्यः ॐकरवाणीतिमाणवकः ॐमादिवासुषुप्स्वइत्याचार्य्यः नस्वपानीतिकुमारः ॐवाचंयच्छइ-
त्याचार्य्यः ॐपच्छानीतिकुमारः ॐसमिधमाधेहीत्याचार्य्यः ॐआदधानीतिमाणवकः ॐअपोऽशानेत्याचा-
र्य्यः ॐअश्नानीतिकुमारः अथाग्नेरुत्तरतः प्रत्यङ्मुखायोपविष्टायाचार्य्यचरणोपसंग्रहणपूर्वकमुपसन्नायाचा-
र्य्यसमीक्ष्यमाणायाचार्य्यः स्वयमपिसमीक्षितापास्मैनिवारितशरवत्पूर्व्यांदिशंदृइष्ट्वासकेसावित्रीमन्वाह तत्रप्र-
थमावृत्तौ ॐभूर्भुवःस्वः तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि धियोयोनःप्रचोदयात् ॐ पुनर्वारद्वये अत्रतुसद्द पाठो
विशेषः अथमाणवकआचार्य्यदक्षिणदिशि अग्निपश्चिमोपविष्टोघृताक्तस्रुक्कनिषिक्तैरिंधनेनजुहुयात् ततः ॐ
अग्नेसुश्रवःसुश्रवसंमाकुरु ॐयथात्वमग्नेसुश्रवःसुश्रवाअसि ॐएवंमां ॐसुश्रवःसौश्रवसंकुरु ॐयथात्वमग्ने
देवानांयज्ञस्यनिधिपाअसि ॐएवमहंमनुष्याणांवेदस्यनिधिपोभूयासम् ततःप्रदक्षिणमग्निंवारिणापर्युक्ष्यअन्या-
यस्वमादेशमितांघृताक्तपलाशसमिधमादाय ॐअग्नयेसमिधमाहार्षंबृहतेजातवेदसेयथात्वमग्नेसमिधासमिध्य-
स एवमहमायुषामेधयावर्चसाप्रजयापशुभिर्ब्रह्मवर्चसेनसमिंधेजीवपुत्रोममाचार्य्योमेधाव्यहमसान्यनिराकरि- ४

५ छुर्यशस्वी तेजस्वी ब्रह्मवर्चस्व्यन्नादो भूयासं ॐ स्वाहा इति मंत्रेण जुहुयात् एवं समिदंतरद्वयं जुहुयात् ॐ अग्ने सुश्रवसं मां
कुरु ॐ यथा त्वमग्ने सुश्रवः सुश्रवा असि ॐ एवं मां सुश्रवः सौश्रवसं कुरु ॐ यथा त्वमग्ने देवानां यज्ञस्य निधिपा असि ॐ
एवमहं मनुष्याणां वेदस्य निधिपो भूयासम् ततः प्रदक्षिणमग्निं पर्युक्ष्य तूष्णीं पाणी प्रतप्य मुखं प्रति मंत्रांते संमृश
ति ॐ तनूपा अग्नेसि तन्वं मे पाहि ॐ आयुर्दा अग्नेस्यायुर्मे देहि ॐ वर्चोदा अग्नेसि वर्चो मे देहि ॐ अग्ने यन्मे तन्वा ऊनं तन्म
आपृण ॐ मेधां मे देवः सविता आदधातु ॐ मेधां मे देवी सरस्वती आदधातु ॐ मेधामश्विनौ देवावाधत्तां पुष्करस्र
जौ ततः सर्वगात्रादिषु दक्षिणपाणिना स्पर्शः अत्र प्रत्येकं मंत्रः ॐ अंगानि च म आप्यायताम् इति सर्वगात्रालंभने
ॐ वाक्च म आप्यायतामिति मुखालंभने ॐ प्राणश्च म आप्यायतामिति नासिकयोः ॐ चक्षुश्च म आप्यायतामिति
चक्षुषोः ॐ श्रोत्रं च म आप्यायतामिति श्रोत्रे ॐ यशोबलं च म आप्यायतामिति मंत्रपाठः ततो दक्षिणकरानामि
काग्रगृहीतभस्मना ललाटे ग्रीवायां दक्षिणबाहुमूले हृदि च त्र्यायुषं कुर्यात् तत्र यथासंख्येन मंत्रचतुष्टयं ॐ त्र्यायुषं ज
मदग्नेः इति ललाटे ॐ कश्यपस्य त्र्यायुषम् इति ग्रीवायाम् ॐ यद्देवेषु त्र्यायुषम् इति दक्षिणबाहुमूले ॐ तन्नो अस्तु त्र्या
युषम् इति हृदि ततो व्यस्तपाणिभ्यां पृथिवीं स्पृशन्नभिवादनं कुर्यात् तत्र प्रकारः ॐ अमुकगोत्रोहममुकप्रवरोहम्

य॰ मुकशर्म्माहं भो वैश्वानर त्वामभिवादये ततोनेनैव क्रमेण संबोध्य वरुणमभिवाद्याचार्य्यं तथैवाभिवादयेत ततः आ
५ युष्मान्भव सौम्येत्याचार्य्यो ब्रूयात ततो भिक्षापात्रमादाय प्रथमं मातुः सकाशात ओं भवति भिक्षां मे देहि इति प्रार्थ
नानंतरं तद्दत्तां चादायाचार्य्याय निवेदयेत तथैव भिक्षांतरं याचेत ततः आचार्य्येण भुंक्ष्वेत्यनुज्ञातो भिक्षां स्वीकुर्य्यात
ततः फलपुष्पचंदनघृतपूर्णस्रुवेण ब्रह्मचारिदक्षिणकरस्पृष्टेनाचार्य्यः पूर्णाहुतिं दद्यात तत्र मंत्रः ओं मूर्द्धानं दिवो ।
अरतिं पृथिव्या वैश्वानरमृत आजातमग्निं कविं सम्राजमतिथिं जनानामासन्ना पात्रं जनयंत देवाः स्वाहा इदमग्नये त
तः स्रुवेण भस्मानीय दक्षिणानामिकाग्रगृहीतभस्मना ओं त्र्यायुषं जमदग्नेः इति ललाटे ओं कश्यपस्य त्र्यायुषम् इति ।
ग्रीवायां ओं यद्देवेषु त्र्यायुषम् इति दक्षिणबाहुमूले ओं तन्नो अस्तु त्र्यायुषम् इति हृदि इति त्र्यायुषं कुर्य्यात कुमारपक्षे ।
तन्नो इत्यस्य स्थाने तत्ते इति विशेषः अथ क्षारलवणमधुमांसादिनिवृत्तिः उद्धृतजलस्नानं दंडकृष्णाजिनधारणं वृक्षा ।
रोहणविषमभूमिलंघननग्नस्त्रीनिरीक्षणस्त्रीसंभोगव्यसनव्यावृत्तिरूपा ब्रह्मचारिणो नियमाः तद्दिने ब्रह्मचारी वाग्य
तोहः शेषं स्थित एव गमयेत ततः सायंसंध्यां कृत्वा तस्मिन्नेवाग्नौ पूर्ववत्पर्युक्षणपरिसमूहने कृत्वा वाचं विसृजेत परि
समूहनं तु शुष्कनिषिद्धेतरेंधनस्याग्नौ प्रक्षेपः ततः संध्यामुपास्य प्रतिदिनं सायं प्रातरपि ब्रह्मचारिणा कर्तव्या अथ वेदा

६ रंभः तत्रकृतनित्यक्रियआचार्य्यः कुशैर्हस्तमात्रपरिमितांभूमिंपरिसमूह्यतान्कुशानैशान्यांपरित्यज्यगोमयोदके
नोपलिप्यस्रुवमूलेनउत्तरोत्तरतः प्रागग्रंप्रादेशमात्रंत्रिरुल्लिख्यउल्लेखनक्रमेणानामिकाङ्गुष्ठाभ्यामुद्धृत्यजलेना
भ्युक्ष्यकांस्येनाग्निमानीयाभिमुखमुपसमाधाय पुष्पचंदनताम्बूलवस्त्राण्यादाय ओंअद्यकर्तव्यवेदारंभहोमकर्म्म
णिकृताकृतावेक्षणरूपब्रह्मकर्मकर्तुममुकगोत्रममुकशर्म्माणंब्राह्मणमेभिः पुष्पचंदनतांबूलवासोभिर्ब्रह्मत्वेनत्वा
महंवृणे इतिब्राह्मणंवृणुयात् ओंवृतोस्मीतिप्रतिवचनंओंयथाविहितंकर्म्मकुर्वित्याचार्य्यः ओंकरवाणीतितेनोक्तेअग्ने
र्दक्षिणतः शुद्धमासनंदत्वा तदुपरिप्रागग्रान्कुशानास्तीर्य्यब्रह्माणमग्निप्रदक्षिणक्रमेणआनयित्वाअस्मिन्कर्म्मणि
त्वंमेब्रह्माभवेत्यभिधाय ॐभवानीतितेनोक्तेब्रह्माणमुदङ्मुखंतत्रोपवेश्यप्रणीतापात्रंपुरतः कृत्वावारिणापरिपूर्य्यकु
शैराच्छाद्यब्रह्मणोमुखमवलोक्याग्नेरुत्तरतः कुशोपरिनिदध्यात् ततः परिस्तरणंबर्हिषश्चतुर्थभागमादयआग्नेया
दीशानांतम् ब्रह्मणोग्निपर्य्यंतम् नैर्ऋत्याद्वायव्यांतम् अग्नितः प्रणीतापर्य्यंतं ततोग्निरुत्तरतः पश्चिमदिशिपवित्रछेद
नार्थंकुशत्रयंपवित्रकरणार्थंसाग्रमनंतर्गर्भकुशपत्रद्वयं प्रोक्षणीपात्रमाज्यस्थालीसंमार्जनकुशाःउपयमनकुशाः
समिधस्तिस्रः स्रुवः आज्यंपूर्णपात्रंपवित्रछेदनकुशानांपूर्वपूर्वदिशिक्रमेणासादनीयं ततः पवित्रछेदनकुशैः प

य०
६

वित्रे छित्वा सपवित्रकरेण प्रणीतोदकं त्रिः प्रोक्षणीपात्रे निधाय द्वाभ्यामनामिकांगुष्ठाभ्यामुत्तराग्रे पवित्रे गृहीत्वा त्रिरु
त्पवनं ततः प्रोक्षणीपात्रं वामहस्ते गृहीत्वा दक्षिणहस्तानामिकांगुष्ठाभ्यां त्रिरुद्दिंगनम् ततः प्रणीतोदकेन प्रोक्षणीपा
त्रमभ्युक्ष्य प्रोक्षणीजलेन यथासादितवस्तून्यभिषिच्याग्निप्रणीतयोर्मध्ये प्रोक्षणीपात्रं निदध्यात् तत आज्यस्थाल्या
माज्यं निरूप्याधिश्रयणम् ततः कुशं प्रज्वाल्याज्यस्याग्नेश्चोपरि प्रदक्षिणं भ्रामयित्वा चाग्नौ तत्प्रक्षेपः ततस्त्रिः स्रुवप्र
तपनं संमार्जनं कुशानामग्रैरन्तरतो मूलैर्बाह्यतः प्रवसं स्पृज्य प्रणीतोदकेनाभ्युक्ष्य पुनस्त्रिः प्रतप्य दक्षिणतो निद=
ध्यात् तत आज्यमग्निप्रदक्षिणं भ्रामयित्वा वेताभ्यामग्नेर्निदध्यात् तत आज्यं प्रोक्षणीवदुत्पवनं अवेक्ष्य सत्यपद्रव्ये त
न्निरसनं ततः प्रोक्षण्युत्पवनं तत उत्थायोपयमनकुशानादाय प्रजापतिं मनसा ध्यात्वा तूष्णीमग्नौ घृताक्ताः समिधा
स्तिस्रः क्षिपेत् तत उपविश्य सपवित्रप्रोक्षण्युदकेन प्रदक्षिणक्रमेणाग्निं पर्युक्ष्य प्रणीतापात्रे पवित्रे निधाय ब्रह्मणान्वा
रब्धः पातितदक्षिणजानुः समिद्धतमेऽग्नौ जुहुयात् तत्र प्रथमाहुतिचतुष्टयेन स्रुवावस्थितहुतशेषघृतस्य प्रोक्षणीपात्रे
प्रक्षेपः ओं प्रजापतये स्वाहा इदं प्रजापतये इति मनसा ओं इन्द्राय स्वाहा इदमिन्द्राय इत्याघारौ ओं अग्नये स्वाहा इदमग्न
ये ओं सोमाय स्वाहा इदं सोमाय इत्याज्यभागौ ततः प्राकृतोऽनन्वारब्धकर्तृको होमः ओं अन्तरिक्षाय स्वाहा इदमन्तरि ६

७ क्षायॐवायवेस्वाहा इदंवायवेॐब्रह्मणेस्वाहा इदंब्रह्मणेॐछंदोभ्यःस्वाहा इदंछंदोभ्यः एतासामान्याहुतयः ॐप्रजाप।
तयेस्वाहा इदंप्रजापतये इतिमनसा ॐदेवेभ्यःस्वाहा इदंदेवेभ्यःॐऋषिभ्यःस्वाहा इदंऋषिभ्यःॐश्रद्धायैस्वाहा
इदंश्रद्धायैॐमेधायैस्वाहा इदंमेधायै ॐसदसस्पतयेस्वाहा इदंसदसस्पतये ॐअनुमतयेस्वाहा इदमनुमतये त।
तोऽन्वारब्धःकर्त्ताकोहोमः ततदाहुत्यनंतरंस्रुवावस्थितहुतशेषघृतस्यप्रोक्षणीपात्रेप्रक्षेपः ॐभूःस्वाहा इदंभूः
ॐभुवःस्वाहा इदंभुवः ॐस्वःस्वाहा इदंस्वः एतामहाव्याहृतयः ॐत्वन्नोऽग्नेवरुणस्यविद्वान्देवस्यहेडोअवया
सिसीष्ठाः यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषांसिप्रमुमुग्ध्यस्मत्स्वाहा इदमग्नीवरुणाभ्यां ॐसत्वन्नो।
अग्नेवमोभवोतीनेदिष्ठोअस्याउषसोव्युष्टौ अवयक्ष्वनोवरुणं रराणोवीहिमृडीकं सुहवोनएधिस्वा।
हा इदमग्नीवरुणाभ्यां ॐअयाश्चाग्नेस्यनभिशस्तिपाश्चसत्वमित्वमयाअसि अयानोयज्ञंवहास्ययानोधेहिभे
षजं स्वाहा इदमग्नये ॐयेतेशतंवरुणायेसहस्रंयज्ञियाः पाशावितताम्महान्तः तेभिर्नोअद्यसवितोतविष्णुर्वि
श्वेमुंचंतुमरुतःस्वर्काःस्वाहा इदंवरुणायसवित्रेविष्णवेविश्वेभ्योदेवेभ्योमरुद्भ्यःस्वर्केभ्यः ॐउदुत्तमंवरुणपाशम
स्मदवाधमंविमध्यमंश्रथाय अथावयमादित्यव्रतेतवानागसोअदितयेस्याम स्वाहा इदंवरुणाय इतिसर्वप्राय

प स्विन्नसंज्ञकाः ॐ प्रजापतये स्वाहा इदं प्रजापतये इति मनसा इति प्राजापत्यं ॐ अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्ट
७ कृते इति स्विष्टकृद्धोमः ततः संस्रवप्राशनम् तत आचम्य ॐ अद्य कृतैतद्वेदारंभहोमकर्मणि कृताकृतावेक्षणरूप
ब्रह्मकर्मप्रतिष्ठार्थमिदं पूर्णपात्रं प्रजापतिदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणाय ब्रह्मणे दक्षिणां तुभ्यमहं संप्रद
दे इति दक्षिणां दद्यात् ॐ स्वस्तीति प्रतिवचनं ततो ब्रह्मग्रंथिविमोकः ॐ सुमित्रिया न आप ओषधयः संतु इति पवित्रा
भ्यां प्रणीताजलमानीय तेन शिरः संमृज्य ॐ दुर्मित्रियास्तस्मै संतु योऽस्मान्द्वेष्टि यं च वयं द्विष्मः इति मंत्रेणैशान्यां प्रणीता
न्युब्जीकुर्यात् ततस्तरणबर्हिरानीय घृतेनाभिघार्य हस्ते क्रमेणैव जुहुयात् ॐ देवा गातुविदो गातुं वित्त्वा गातुमितम
नसस्पत इमं देव यज्ञं स्वाहा वाते धाः स्वाहा इति बर्हिर्होमः ततः काश्मीरगमनं तत इष्टासके वेदारंभं गुरुः कारये
त् तत्क्रमः ॐ भूर्भुवः स्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ॐ इति प्रणवांतं पठित्वा पंक्तिनम
स्कारं च कारयित्वा ॐ समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिम् अस्मिन्हव्या जुहोतन सुसमिद्धाय शोचिषे इति कंडि
कांतरं वा फलहिकादावा पाठयेत् ततः संपूर्णां स्वस्तिवाचयित्वा उत्थाय फलपुष्पसमन्वितब्रह्मचारिदक्षिणकरस्पृष्टेन ७
घृतपूर्णेन पूर्णाहुतिं दद्यात् ॐ मूर्द्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निं कवि ६० सम्राजमतिथिं जनाना

मासान्नापात्रं जनयन्त देवाः इति पूर्णाहुतिः ततः पश्चिमस्य स्रुवेण भस्मानीय दक्षिणानामिकाग्रगृहीतभस्मना त्र्यायुषं
८ जमदग्नेरिति ललाटे ॐ कश्यपस्य त्र्यायुषमिति ग्रीवायां ॐ यद्देवेषु त्र्यायुषं इति दक्षिणबाहुमूले ॐ तन्नो अस्तु
त्र्यायुषमिति हृदि अनेनैव क्रमेण ब्रह्मचारिललाटादावपि तत्र तत इति विशेषः इति वेदारंभः अथ समावर्तनं
तत्र शुभे दिने प्रह्वीभूय आचार्यं स्नास्यामीति कुमार आचार्यं भाषते तत्र स्नाह्याहीत्याचार्यः ततो ब्रह्मचारिणा आ
चार्यसन्निहितदक्षिणादिशि उपविष्टः कृतस्नानादिराचार्यः कुशैर्हस्तमात्रीं भूमिं परिसमूह्य तानैशान्यां परित्य
ज्य गोमयोदकेनोपलिप्य स्रुवमूलेनोत्तरोत्तरक्रमेण त्रिरुल्लिख्य उल्लेखनक्रमेणोद्धृत्य जलेनाभ्युक्ष्य कांस्येनाग्नि
मानीय प्रत्यङ्मुखं निदध्यात् ततः पुष्पचंदनताम्बूलवासांस्यादाय ॐ अद्यामुकस्य कर्त्तव्यसमावर्त्तनहोमकर्म्मणि
कृताकृतावेक्षणरूपब्रह्मकर्म कर्तुममुकगोत्रममुकशर्म्माणं ब्राह्मणमेभिः पुष्पचंदनताम्बूलवासोभिर्ब्रह्मत्वेन त्वाम
हं वृणे वृतोस्मीति प्रतिवचनं यथाविहितं कर्म कुर्वित्यभिधाय ॐ करवाणीति तेनोक्ते अग्नेर्दक्षिणतः शुद्धमासनं द
त्वा तदुपरि प्रागग्रान्कुशानास्तीर्य्यास्मिन्कर्म्मणि त्वं मे ब्रह्मा भवेत्यभिधाय ॐ भवानीति तेनोक्ते ब्राह्मणमुदङ्मुखं त
त्रोपवेश्य ततः प्रणीतापात्रं पुरतः कृत्वा वारिणा परिपूर्य्य कुशैराच्छाद्य ब्रह्मणो मुखमवलोक्याग्नेरुत्तरतः कुशोपरि नि

ग्र दध्यात् ततः परिस्तरणं बर्हिषश्चतुर्थभागमादायाग्नेयादीशानान्तं ब्रह्मणोऽग्निपर्यन्तं नैर्ऋत्याद्वायव्यान्तं अग्नितः प्रणी
८ तापर्यन्तं ततोऽग्नेरुत्तरतः पश्चिमदिशि पवित्रच्छेदनार्थं कुशत्रयम् पवित्रकरणार्थं साग्रमनन्तर्गर्भं कुशपत्रद्वयं प्रो
क्षणीपात्रं आज्यस्थाली संमार्जनार्थं कुशाः उपयमनकुशाः समिधस्तिस्रः स्रुवः आज्यं पूर्णपात्रं पवित्रच्छेदनकु
शानां पूर्वपूर्वदिशि क्रमेणासादनीयम् ततः पवित्रच्छेदनकुशैः पवित्रे छित्वा सपवित्रकरेण प्रणीतोदकं त्रिः प्रोक्ष
णीपात्रे निधायानामिकाङ्गुष्ठाभ्यां पवित्रे गृहीत्वा त्रिरुत्पूय प्रोक्षणीपात्रं वामकरेण दायानामिकाङ्गुष्ठगृहीतपवि
त्राभ्यां तज्जलं किञ्चित्त्रिः प्रक्षिप्य प्रणीतोदकेन प्रोक्षणीमभ्युक्ष्य प्रोक्षणीजलेन यथासादितवस्तून्यभिषिच्याग्निप्र
णीतयोर्मध्ये प्रोक्षणीपात्रं निदध्यात् ततआज्यस्थाल्यामाज्यनिर्वापः अधिश्रयणं ततस्तृणं प्रज्वाल्याज्यस्याग्नेश्चोप
रि प्रदक्षिणं भ्रामयित्वा वह्नौ तत्प्रक्षिप्य स्रुवं त्रिः प्रतप्य संमार्जनकुशानामग्रैरन्तरतो मूलैर्बाह्यतः स्रुवं संमृज्य प्रणीतो
दकेनाभ्युक्ष्य पुनः प्रतप्य स्रुवस्य दक्षिणतो निदध्यात् तत आज्यमग्निप्रदक्षिणं भ्रामयित्वावतार्य त्रिः प्रोक्षणीवदुत्पू
यावेक्ष्य सत्यपद्रव्ये तन्निरसनं कृत्वा पुनः पूर्ववत्प्रोक्ष्यण्युत्पवनम् ततउत्थायोपयमनकुशान्वामहस्तेकृत्वा प्रजापतिं
मनसा ध्यात्वा तूष्णीमग्नौ घृताक्ताः समिधस्तिस्रः क्षिपेत् ततउपविश्य सपवित्रप्रोक्ष्यण्युदकेन प्रदक्षिणक्रमेणाः ८

९ ग्निं पर्युक्ष्य प्रणीतापात्रे पवित्रे निधाय पातितदक्षिणजानुः समिद्धतमेऽग्नौ ब्रह्मणान्वारब्धः स्रुवेणाज्याहुती जुहुया
त् तत्र प्रथमाहुतिचतुष्टये मन्त्याहुत्यनन्तरं स्रुवावस्थितहुतशेषघृतस्य प्रोक्षणीपात्रे प्रक्षेपः ओं प्रजापतये स्वा
हा इदं प्रजापतये इति मनसा ओं इन्द्राय स्वाहा इदमिन्द्राय इत्याघारौ ओं अग्नये स्वाहा इदमग्नये ओं सोमाय स्वा
हा इदं सोमाय इत्याज्यभागौ ततोऽन्वारब्धकर्तृकहोमः ओं अन्तरिक्षाय स्वाहा इदमन्तरिक्षाय ओं वायवे स्वाहा इ
दं वायवे ओं ब्रह्मणे स्वाहा इदं ब्रह्मणे ओं छन्दोभ्यः स्वाहा इदं छन्दोभ्यः ओं प्रजापतये स्वाहा इदं प्रजापतये इति म
नसा ओं देवेभ्यः स्वाहा इदं देवेभ्यः ओं ऋषिभ्यः स्वाहा इदं ऋषिभ्यः ओं श्रद्धायै स्वाहा इदं श्रद्धायै ओं मेधायै स्वा
हा इदं मेधायै ओं सदसस्पतये स्वाहा इदं सदसस्पतये ओं अनुमतये स्वाहा इदमनुमतये ततो ब्रह्मणाऽन्वारब्धो
जुहुयात् अत्राहुतिदशतये तत्तदाहुत्यनन्तरं स्रुवावस्थिताज्यस्य प्रोक्षणीपात्रे प्रक्षेपः ओं भूः स्वाहा इदं भूः ओं भुवः
स्वाहा इदं भुवः ओं स्वः स्वाहा इदं स्वः एता महाव्याहृतयः ओं त्वन्नो अग्ने वरुणस्य विद्वान् देवस्य हेडो अवयासिसी
ष्ठाः यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांसि प्रमुमुग्ध्यस्मत् स्वाहा इदमग्नीवरुणाभ्यां ओं स त्वन्नो अग्नेऽवमो
भवोती नेदिष्ठो अस्या उषसो व्युष्टौ अव यक्ष्व नो वरुणं रराणो वीहि मृडीकं सुहवो न एधि स्वाहा इदमग्नीवरुणाभ्यां

प. १८

ओं अयाश्चाग्नेस्यनभिशस्तिपाश्च सत्यमित्वमया असि अया नो यज्ञं वहास्यया नो धेहि भेषजं स्वाहा इदमग्न
ये ओं ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः तेभिर्नो अद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वा
हा इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यः ओं उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्र
थाय अथा वयमादित्य व्रते तवानागसो अदितये स्याम स्वाहा इदं वरुणाय इति सर्वप्रायश्चित्तं ओं प्रजापतये।
स्वाहा इदं प्रजापतये इति मनसा इति प्राजापत्यम् ओं अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते इति स्विष्टकृत्।
ततः संस्रवप्राशनम् ततः आचम्य ओं अद्येह कृतैतत्समावर्तनहोमकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्मप्रतिष्ठार्थं
मिदं पूर्णपात्रं प्रजापतिदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणाय ब्रह्मणे दक्षिणां तुभ्यमहं सम्प्रददे इति दक्षिणां द।
द्यात् ओं स्वस्तीति प्रतिवचनं ततो ब्रह्मग्रन्थिविमोकः ततः पवित्राभ्यां प्रणीताजलेन ओं सुमित्रिया न आप ओषधय।
सन्तु इति मन्त्रेण शिरः संमृज्य ओं दुर्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यं च वयं द्विष्मः इति मन्त्रेणैशान्यां प्रणीतान्युब्जी।
करणं ततः स्तरणक्रमेण बर्हिरानीय घृतेनाभिघार्य हस्तेनैव जुहुयात् ओं देवा गातुविदो गातुं वित्त्वा गातुमित मनस।
स्पत इमं देव यज्ञं स्वाहा वाते धाः स्वाहा इति बर्हिर्होमः ततो ब्रह्मणान्वारब्धकर्त्तृकं कर्म ततोऽग्निपश्चिमोपविष्टः। ९

१० अग्ने वारिपरिसमूहनं कुर्य्यात् तत्र घृताक्त शुष्क निषिद्ध तेऽधैनेन पंचाहुतीर्हस्तेनैव जुहुयात् ॐ अग्ने सुश्रवः सुश्रवसं
मा कुरु ॐ यथा त्वमग्ने सुश्रवः सुश्रवा असि ॐ एवं मां सुश्रवः सौश्रवसं कुरु ॐ यथा मग्ने देवानां यज्ञस्य निधिपा असि
एवमहं मनुष्याणां वेदस्य निधिपा भूयासम् ततः प्रदक्षिणमग्निं वारिणा पर्युक्ष्य उत्थाय घृताक्तां प्रादेशमितां समिध
मादाय जुहुयात् तत्र मन्त्रः ॐ अग्नये समिधमाहार्षं बृहते जातवेदसे यथा त्वमग्ने समिधा समिध्यस एवमहमायुषा मेध
या वर्चसा प्रजया पशुभिर्ब्रह्मवर्चसेन समिन्धे जीवपुत्रो ममाचार्यो मेधाव्यहमसान्यनिराकरिष्णुर्यशस्वी तेजस्वी ब्रह्म
वर्चस्यन्नादो भूयासं स्वाहा ततः समिद्द्वयमनेनैव क्रमेण प्रत्येकं हुत्वा उपविश्य तेनैव क्रमेण पंचाहुती घृता
क्ताः शुष्क निषिद्ध तेऽधैनेन जुहुयात् ॐ अग्ने सुश्रवः सुश्रवसं मा कुरु ॐ यथा त्वमग्ने सुश्रवः सुश्रवा असि ॐ एवं मां सु
श्रवः सौश्रवसं कुरु ॐ यथा त्वमग्ने देवानां यज्ञस्य निधिपा असि ॐ एवमहं मनुष्याणां वेदस्य निधिपो भूयासम् ततः
प्रदक्षिणमग्निं वारिणा पर्युक्ष्य तत्पाणी प्रतप्य मुखं प्रतिमन्त्रं तेन मृशति ॐ तनूपा अग्नेऽसि तन्वं मे पाहि ॐ आयुर्दा
अग्नेऽस्यायुर्मे देहि ॐ वर्चोदा अग्नेऽसि वर्चो मे देहि ॐ अग्ने यन्मे तन्वा ऊनं तन्म आपृण ॐ मेधां मे देवः सविता आदधा
तु ॐ मेधां मे देवी सरस्वती आदधातु ॐ मेधां मे अश्विनौ देवावाधत्तां पुष्करस्रजौ तत्र सर्वगात्रादिषु दक्षिणपाणिना

य०
१०
स्पर्शः तत्र प्रत्येकं मंत्रः ओं अंगानि च म आप्यायंताम् इति सर्वगात्रालंभने वाक्च म आप्यायतामिति मुखालंभने ओं
प्राणश्च म आप्यायतामिति नासिकयोः ओं चक्षुश्च म आप्यायतामिति चक्षुर्द्वयस्पर्शः ओं श्रोत्रं च म आप्यायतामिति
श्रोत्रद्वयस्पर्शः ओं यशो बलं च म आप्यायतामिति मंत्रपाठमात्रं ततो दक्षिणानामिकाग्रगृहीतभस्मना ललाटे
ग्रीवायां दक्षिणबाहुमूले हृदि च त्र्यायुषं कुर्यात् यथासंख्येन मंत्रचतुष्टयम् ओं त्र्यायुषं जमदग्नेरिति ललाटे ओं क
श्यपस्य त्र्यायुषं इति ग्रीवायां ओं यद्देवेषु त्र्यायुषं इति दक्षिणबाहुमूले ओं तन्नो अस्तु त्र्यायुषं इति हृदि ततो व्यस्तपा
णिभ्यां पृथिवीं स्पृशन् प्रथमं वैश्वानरं संबोध्याभिवादयेत् तत्रामुकगोत्रोहममुकप्रवरोहममुकशर्माहं भो वैश्वान
र त्वामभिवादये इति प्रकारः ततस्तथैव वरुणं संबोध्याभिवादयेत् तथैवाचार्यं चाभिवादयेत् ततः आयुष्मान्भव सौ
म्य इत्याचार्यो ब्रूयात् ततोग्नेरुत्तरतः प्रागग्रान्कुशानास्तीर्य तदुपरि दक्षिणोत्तरक्रमेणासादितवारिपूर्णकलशाष्टत
येकलशानां पुरतः प्रागग्रेषु कुशेषु स्थित्वा एकस्मादाम्रपल्लवेनोदकं गृहीत्वा ओं ये अप्स्वन्तरग्नयः प्रविष्टा गोह्य उपगोह्यो
मयूषो मनोहास्खलो विरुजस्तनूदूषुरिन्द्रियहा तान्विजहामि यो रोचनस्तमिह गृह्णामि इति मंत्रेण ततस्तेन मामभिषिं
चामि श्रियै यशसे ब्रह्मणे ब्रह्मवर्चसाय इत्यात्मानमभिषिंचति ततो द्वितीयघटस्थमुदकं गृहीत्वाम्रपल्लवेनाभिषिंचति १०

ओंयेनश्रियमकृणुतांयेनावमृशतांसुरांयेनाक्षावभ्यषिंचतांयद्वांतदश्विनायशः इतिमंत्रेण ततस्तेनैवक्रमेणतृतीय
कलशस्थजलमादाय ओं आपोहिष्ठामयोभुवस्तानऊर्जेदधातनमहेरणायचक्षसे इतिमंत्रेणाभिषिच्य तेनैवक्रमे
णचतुर्थकलशस्थजलमादाय ओं योवःशिवतमोरसस्तस्यभाजयतेहनः उशतीरिवमातरः इतिमंत्रेणाभिषिच्य प
चमकलशस्थजलंतथैवादाय ओंतस्मा अरंगमामवोयस्यक्षयायजिन्वथ आपोजनयथाचनः इतिमंत्रेणाभिषि
च्य ततोवशिष्टकलशत्रयजलंतथैवप्रत्येकंगृहीत्वातूष्णींप्रत्येकमभिषिंचति ततोमेखलामोचनंशिरोभागेन ओं
उदुत्तमंवरुणपाशमस्मदवाधमंविमध्यमंश्रथाय अथावयमादित्यव्रतेतवानागसोअदितयेस्याम इतिमंत्रेण
दंडकृष्णाजिनेतूष्णींभूमौनिधाय अन्यद्वस्त्रंपरिधायोत्तरीयंचकृत्वाचम्यबद्धांजलिरादित्यमुपतिष्ठेत् ब्रह्मचारी ओं
उद्यन्भ्राजभृष्णुरिंद्रोमरुद्भिरस्थात् प्रातर्यावभिरस्थात्दशसनिरसिदशसनिंमाकुर्वाविदन्मागमय उद्यन्भ्राजभृष्णु
रिंद्रोमरुद्भिरस्थात्सायंयावभिरस्थात् सहस्रसनिरसिसहस्रसनिंमाकुर्वाविदन्मागमय इतिमंत्रेण ततोदधितिला
लान्वाप्राश्याचम्यनखरोमादीन्छेदयित्वास्नात्वाचम्य प्रादेशमितउदुंबरकाष्ठेनदंतधावनम् ओं अन्नाद्यायव्यूह
ध्वं सोमोराजायमागमत् समेमुखंप्रमार्क्ष्यतेयशसाचभगेनच इतिमंत्रेण ततोदंतकाष्ठंपरित्यज्याचम्यसुगंधि

द्रव्येनोद्वर्तनानंतरं स्नात्वा द्विराचम्य चंदनकुंकुमादिना नासिकायां मुखस्यालंभने ओं प्राणापानौ मे तर्पय ओं
चक्षुर्मे तर्पय ओं श्रोत्रं मे तर्पय इति मंत्रेणानुलिंपति ततः पाणी प्रक्षाल्य दक्षिणाभिमुखः पातितवामजानुः कृ-
तापसव्यो द्विगुणभुग्नकुशत्रययुतिलजलान्यादाय आस्तृतकुशत्रयोपरि पितॄंस्तर्पयेत् ओं पितरः शुंधध्वमिति मंत्रे-
ण ततः सव्यं कृत्वा आचम्यानुलिप्य जपेत् ओं सुचक्षा अहमक्षीभ्यां भूयासं सुवर्चा मुखेन सुश्रुत्कर्णाभ्यां भूयासम् इति त-
तोऽहतवसुपरिधानं ओं परिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टिरस्मि शतं च जीवामि शरदः पुरूची रायस्पोषमभि-
संव्ययिष्ये इति मंत्रेण ततो यज्ञोपवीतपरिधानं ओं यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् आयुष्यमग्र्यं प्र-
तिमुंच शुभ्रं यज्ञोपवीतं बलमस्तु तेजः इति मंत्रेण द्वितीयप्रदानं यज्ञोपवीतमिति प्रजापतिऋषिर्यजूरूपवीते देवता
यज्ञोपवीतपरिधाने विनियोगः यज्ञोपवीतमसि यज्ञस्य त्वोपवीतेनोपनह्यामि आचमनं अथोत्तरीयं ओं यशसा मा-
द्यावापृथिवी यशसेन्द्राबृहस्पती यशो भगश्च मा विदद्यशो मा प्रतिपद्यताम् इति मंत्रेण ततः पुष्पमालाग्रहणमंत्रः
ओं या आहरज्जमदग्निः श्रद्धायै मेधायै कामायेंद्रियाय ता अहं प्रति गृह्णामि यशसा च भगेन च इति मंत्रेण पुष्पमालाग्र-
हणं ततः पुष्पमालापरिधानं ओं यद्यशोऽप्सरसामिंद्रश्चकार विपुलं पृथु तेन संग्रथिताः सुमनस आबध्नामि यशो मः २२

यि इतिमंत्रेणपुष्पमालापरिधानं अथवस्त्रप्रतिष्ठाग्रंथोक्तीयेणशिरोवेष्टनं ॐयुवासुवासाःपरिवीतआगात्स
उश्रेयान्भवतिजायमानः तंधीरासःकवयउन्नयंतिस्वाध्योमनसादेवयंत इतिमंत्रेण ततःकुंडलेपरिदध्या
ति ॐअलंकरणमसिभूयोलंकरणंभूयात् ततोअंजनं ॐवृत्रस्यासिकनीनकश्चक्षुर्दाअसिचक्षुर्मेदेहि ततआद
र्शे आत्मदर्शनं ॐरोचिष्णुरसि इतिमंत्रेण ततश्छत्रग्रहणं ॐबृहस्पतेश्छदिरसिपाप्मनोमामंतर्धेहि तेजसोय
शसोमामंतर्धेहि इतिमंत्रेण ततःपद्भ्यामुपानहौप्रतिगृह्णाति ॐप्रतिष्ठेस्थोविश्वतोमापातम् इतिमंत्रेण ततो
वैणवदंडधारणं ॐविश्वाभ्योमाराष्ट्राभ्यःपरिपाहिसर्वतः इतिमंत्रेण ततःस्नातकस्यनियमाः गानवादित्रनृत्य
त्यागः नतत्रगमनंक्षेमसतिनरात्रौग्रामांतरगमनंनधावेत् नकूपेऽवेक्षणंनवृक्षारोहणंफलत्रोटनंअमार्गे
ननगच्छेत् नग्नोनस्नायात् नसंधिसर्पणं नविषमभूमिलंघनंअश्लीलंनोपवदेत् उदितास्तसमयेसूर्यंनोप
श्येत् जलमध्येसूर्यं आकाशस्थंनपश्येत् देवेवर्षतिनगच्छेत् उदके आत्मानंनपश्येत् अजातलोम्नीमप्रमत्तापु
रुषाकृतिषंडंचनगच्छेदित्यादि ततआचार्यायवरांदक्षिणांदद्यात् ततःमूर्द्धानंदिवोअरतिंपृथिव्यावैश्वानरमृ
तआजातमग्निंकविꣳसम्राजमतिथिंजनानामासन्नापात्रंजनयंतदेवाः स्वाहा इतिमंत्रेण फलपुष्पसमन्वि

# यज्ञोपवीत

तिष्ठन् पूर्णं अवेक्षमाण दक्षिण करएष्टेन उत्थाय पूर्णाहुतिमाचार्यः कुर्य्यादिति ग्रीवायां ओं यदेवेषु त्र्यायुष
मिति दक्षिणवाहुमूले तन्नो अस्तु त्र्यायुषमिति हृदि इति त्र्यायुषं कुर्य्यात् अनेनैव क्रमेण कुमारललाटादावपि तन्न
तन्नो इत्यस्य स्थाने तते इति विशेषः ततो मूर्द्धाक्षतादि ग्रहणं इति श्री महामन्त्रक महासामन्ताधिपति श्रीरामदत्त वि
रचिता वाजसनेयिनां उपनयनकर्मपद्धतिः समाप्ता ॥ अथ सामग्री रोली ११ मोली ७ केसर २५ बतासा ३) आटा
चावल पुष्प १२ पुष्पमाला धूप ३ दीप १ तांबूल ७ यज्ञोपवीत ९ प्रणीतापात्र ३ प्रोक्षणीपात्र ३ कांस्यपात्र ६ छायापात्र
१ सुवर्ण १ कुशा १ स्रुवा १ गोमय एरंगोगोहे पलाश समिधा सेर ३ पूर्णपात्र ३ उपर्णा ५ धोतीया पा २ कुपीन ५ मृगचर्म १
पलाशदंड १ गूलर शाखा १ मेखला मूंज की १ सुहारियां सेर १ पूवा ८ लोटिया ८ नारियल २ खडाऊं जोड़ा १ पड़ी
१ खैर १ लाई ५ गुग्गली १ कस्तूरी २१ घृत ६ तिल ३ दधि १ सुपारी ११ आम्रपल्लव गुह्यादिपत्र ७ अंजन १ दर्पण १ व
सु ५ मोती अपान होवटणो रत दूर्वा दोने १० अबीर श्वेत ६ ब्राह्मणभोजन दक्षिणा पचरंग २५ इति: माघ कृ ८ सं: १९